वराहं वराहारमुत्कृष्टभोजनं। यद्वा वराहवद्दृढांगं। अरुषमारोचमानं कपर्दिनं जटाभिर्युक्तं त्वेषं तेजसा दीप्यमानं रूपं निरूपणीयं वेदांतैरधिगम्यं। एवंभूतं रुद्रं नमसा हविर्लक्षणेनान्नेन नमस्कारेण वा दिवो द्युलोकस्सकाशान्निह्वयामहे। नितरामाह्वयामः। स आहूतो रुद्रो हस्ते स्वकीये बाहौ वार्याणि सर्वैर्वरणीयानि भेषजा भेषज्यानि रोगशमनहेतुभूतानि बिभ्रत् धारयन् अस्मभ्यं स्तोतृभ्यः शर्मारोग्यलक्षणं सुखं वर्मायुधानां निवारकं कवचं छर्दिः। गृहनामैतत्। गृहं च यंसत्। प्रयच्छतु॥ बिभ्रत्। डुभृञ् धारणपोषणयोः। जौहोत्यादिकः। लटः शतृ। भृञामिदित्यभ्यासस्येत्वं। भेषजाः। भिषज् चिकित्सायां। कंड्वादिः। पचाद्यच्। अतोलोपयलोपौ। सुमंगलभेषजाच्चेति निपातनाद्रूपसिद्धिः। शेश्छंदसि बहुलमिति शेर्लोपः। वार्याणि। वृङ् संभक्तौ। ऋहलोर्ण्यत्। ईडवंदेत्याद्युदात्तत्वं। छर्दिः। उछृदिर् दीप्तिदेवनयोः। छृद्यते दीप्यते सुवर्णादिभिर्धनैः प्रकाश्यत इति छर्दिर्गृहं। अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः। यंसत्। यम उपरमे। लेट्यडागमः। सिब्बहुलं लेटीति सिप्। इतश्च लोप इतीकारलोपः॥

॥ इति प्रथमस्याष्टमे पंचमो वर्गः॥

षष्ठीमृचमाह॥

इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनं।
रास्वा च नो अमृत मर्तभोजनं त्मने तोकाय तनयाय मृळ॥६॥

इदं । पित्रे । मरुतां । उच्यते । वचः । स्वादोः । स्वादीयः ।

रुद्राय । वर्धनं ।

रास्वं । च । नः । अमृत । मर्तऽभोजनं । त्मने । तोकाय ।

तनयाय । मृळ ॥ ६ ॥

इदं स्तुतिलक्षणं वचो मरुतामेकोनपंचाशत्संख्याकानां देवविशेषाणां पित्रे जनकाय रुद्रायेश्वरायोच्यते । उच्चार्यते । कीदृशं । स्वादोः स्वादीयः । रसवतो मधुघृतादेरपि स्वादुतरं । अतिशयेन हर्षजनकमित्यर्थः । वर्धनं । स्तुत्यस्य प्रवर्धकं । स्तोत्रेण हि देवता हृष्टा सती प्रवर्धते । रुद्रस्य च मरुतां पितृत्वमेवमाख्यायते । पुरा कदाचिदिंद्रोऽसुराञ्जिगाय । तदानीं दितिरसुरमातेंद्रहननसमर्थं पुत्रं कामयमाना तपसा भर्तुः सकाशाद्गर्भं लेभे । इमं वृत्तांतमवगच्छन्निंद्रो वज्रहस्तः सन् सूक्ष्मरूपो भूत्वा तस्या उदरं प्रविश्य तं गर्भं सप्तधा बिभेद । पुनरप्येकैकं सप्तखंडमकरोत् । ते सर्वे गर्भैकदेशा योनेर्निर्गत्यारुदन् । एतस्मिन्नवसरे लीलार्थं गच्छंतौ पार्वतीपरमेश्वरा विमानाद्ददृशतुः । सदेशं प्रति पार्वत्येवमवोचत् । इमे मांसखंडा यथा प्रत्येकं पुत्राः संपद्यंतामेवं त्वया कार्यं मयि चेत्प्रीतिरस्तीति । स च महेश्वरस्तान्समानरूपान् समानवयसः समानालंकारान्पुत्रान्कृत्वा गौर्यै प्रददौ तवेमे पुत्राः संत्विति । अतः सर्वेषु मारुतेषु सूक्तेषु मरुतो रुद्रपुत्रा इति स्तूयंते । रौद्रेषु च मरुतां पिता रुद्र इति । अपि च हे अमृत मरणरहित रुद्र मर्तभोजनं मर्तानां मनुष्याणां भोगपर्याप्तमन्नं नोऽस्मभ्यं रास्व ।

प्रयच्छ । तथा त्मने आत्मने । द्वितीयार्थे चतुर्थी । मा । तोकाय तोकं पुत्रं । तनयाय तनयं तत्पुत्रं च मृड़ । सुखय ॥ पित्वे । उदात्तयण इति विभक्तेरुदात्तत्वं । रास्व । रा दाने । व्यत्ययेनात्मनेपदं । त्मने । मंत्रेष्वाङ्यादेरात्मन इत्यत्राङो-ऽन्यत्रापि छंदसि दृश्यत इति वचनादात्मन आकारलोपः ॥

सप्तमीमृचमाह ॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा

न उक्षितं ।

मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो

रुद्र रीरिषः ॥ ७ ॥

मा । नः । महान्तं । उत । मा । नः । अर्भकं । मा । नः ।

उक्षन्तं । उत । मा । नः । उक्षितं ।

मा । नः । वधीः । पितरं । मा । उत । मातरं । मा । नः ।

प्रियाः । तन्वः । रुद्र । रिरिषः ॥ ७ ॥

हे रुद्र नोऽस्माकं मध्ये महान्तं वृद्धं मा वधीः । मा हिंसीः । उत अपि च नोऽस्माकमर्भकं बालं मा हिंसीः । तथा नोऽस्माकं मध्य उक्षन्तं सेक्तारं मध्यवयस्कं युवानं मा वधीः । उत अपि च नोऽस्माकमुक्षितं गर्भरूपेण स्त्रीषु निषिक्तमपत्यं मा वधीः । तथा नोऽस्माकं पितरं जनकं मा वधीः । उत अपि च मातरं जननीं मा वधीः । तथा नोऽस्माकं प्रियाः स्नेहविषयास्तन्वः शरीराणि तनूषु भवाः प्रजा वा हे रुद्र मा

रीरिषः । मा हिंसीः ॥ वधीः । हंतेर्माङि लुङि चेति वधादेशः । स आदंतः । सिच इट् । अतो लोपस्य स्थानिवद्भावाद्वृद्ध्यभावः । रीरिषः । रिष हिंसायां । ण्यंताल्लुङि चङि णिलोपोपधाह्रस्वत्वादीनि । छांदसः पदकालीनोऽभ्यासह्रस्वः ॥

अष्टमीमृचमाह ॥

मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान्मा नो रुद्र भामितो वधीर्हविष्मंतः सदमित्त्वा हवामहे ॥ ८ ॥

मा । नः । तोके । तनये । मा । नः । आयौ । मा । नः । गोषु । मा । नः । अश्वेषु । रिरिषः ।
वीरान् । मा । नः । रुद्र । भामितः । वधीः । हविष्मंतः । सदं । इत् । त्वा । हवामहे ॥ ८ ॥

हे रुद्र नोऽस्माकं तोकादिविषये मा रीरिषः । मा हिंसीः । तोकशब्दः पुत्रवाची । तनयस्तत्पुत्रः । आयुरित्यंतोदात्तो मनुष्यनाम । पुत्रपौत्रव्यतिरिक्तो नोऽस्मदीयो मनुष्यस्तस्मिन् गोषु पश्वादिष्वश्वेषु च मा रीरिषः । हिंसां मा कृथाः । तथा हे रुद्र वीरान् विक्रांतान् शौर्योपेतानस्मदीयान् भामितः क्रुद्धः सन् मा वधीः । मा हिंसीः । वयं च हविष्मंतो हविर्भिर्युक्ताः संतः सदमित् सर्वदैव त्वां हवामहे । आह्वयामहे ॥ आयौ । इण् गतौ । छंदसीण इत्युण्प्रत्ययः । भामितः ।

रक्षणं वृणीमहे । संभजामहे ॥ अकरं । छंदसि लुङ्लङ्लिट इति वर्तमाने लुङ् । कृमृदृरुहिभ्य इति च्लेरङादेशः । ऋदृशोऽङि गुणः । पितर्मरुतां । परमपि छंदसीति परस्याः षष्ठ्याः पूर्वामंत्रितानुप्रवेशे सत्यामंत्रितस्य चेति पदद्वयमप्यनुदात्तं । अस्मे । सुपां सुलुगिति चतुर्थीबहुवचनस्य शे आदेशः मृळयत्तमा । मृड़ सुखने । अस्मात्संप्रतात्लटः शतृ । तस्य छंदस्युभयथेत्यार्धधातुकत्वात्सार्वधातुकानुदात्तत्वाभावे प्रत्ययस्वरः शिष्यते ॥

दशमीमृचमाह ॥

आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु ।
मृळा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ
द्विबर्हाः ॥ १० ॥

आरे । ते । गोऽघ्नं । उत । पुरुषऽघ्नं । क्षयत्ऽवीर ।
सुम्नं । अस्मे इति । ते । अस्तु ।
मृळ । च । नः । अधि । च । ब्रूहि । देव । अध । च । नः ।
शर्म । यच्छ । द्विऽबर्हाः ॥ १० ॥

हे क्षयद्वीर क्षयितसर्वशत्रुजन रुद्र ते त्वदीयं गोघ्नं यद्गोहननं यद्वा गोहननसाधनमायुधं । उत अपि च पुरुषघ्नं पुरुषहननं तत्साधनमायुधं वा तदुभयमारे दूरेऽस्मत्तो विप्रकृष्टदेशे भवतु । अस्मे अस्मासु ते त्वदीयं सुम्नं सुखमस्तु । भवतु । अपि च नोऽस्माकं मृड़ । सुखसिद्ध्यर्थं प्रसन्नो भव । हे देव

क्षीतमान रुद्र नोऽस्मानधि ब्रूहि च। अधिवचनं पक्षपातेन वचनं ब्राह्मणायाधिब्रूयादिति यथा। अथ च अथानंतरं च द्विबर्हा द्वयोः स्थानयोः पृथिव्यामंतरिक्षे च परिवृढः। यद्वा द्वयोर्दक्षिणोत्तरमार्गयोर्ज्ञानकर्मणोर्वा परिवृढः स्वामी स त्वं नोऽस्मभ्यं शर्म सुखं यच्छ। देहि॥ गोघ्नं। हन हिंसागत्योः। अस्मादन्यर्थे कविधानमिति भावे करणे वा कप्रत्ययः। गमहने-त्युपधालोपः। हो हंतेरिति कुत्वं। द्विबर्हाः। वृह वृहि वृद्धौ। द्वयोः स्थानयोर्दृहते प्रवर्धत इति द्विबर्हाः। असुन्। कृदुत्तरपदप्रकृतिस्वरत्वं॥

एकादशीमृचमाह॥

अवोचाम नमो अस्मा अवस्यवः शृणोतु नो हवं रुद्रो मरुत्वान्।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः॥ ११॥

अवोचाम। नमः। अस्मै। अवस्यवः। शृणोतु। नः। हवं। रुद्रः। मरुत्वान्।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः॥ ११॥

अवस्यवोऽवोऽन्नं रक्षणं वेच्छंतो वयमवोचाम। एतत्सूक्त-रूपं स्तोत्रमवादिष्म। अस्मै रुद्राय नमो नमस्कारोऽस्तु।

अदत्वान्मरुद्भिः स्वकीयैः पुत्रैर्युक्तो रुद्रश्च नोऽस्माकं इदमाह्वानं शृणोतु । स्वीकरोतु । यदस्माभिरुक्तं नोऽस्मदीयं तत्सर्वं मित्रादयः षट् देवता मामहंतां । पूजयंतु । उतशब्दोऽप्यर्थः ॥ अवोचाम । ब्रूञ् व्यक्तायां वाचि । लुङि ब्रुवो वचिः । अस्यतिवक्तीत्यादिना च्लेरङादेशः । वच उमित्युमागमः । अवस्रवः । अव रक्षणे । भावेऽसुन् । सुप आत्मनः क्यच् । क्याच्छंदसीत्युप्रत्ययः । हवं । भावेऽनुपसर्गस्येत्यप् संप्रसारणं च । मरुत्वान् । झय इति मतुपो वत्वं । तसौ मत्वर्थे इति भत्वेन पदत्वाभावाज्जश्त्वाभावः ॥

॥ इति प्रथमस्याष्टमे षष्ठो वर्गः ॥

चित्रमिति षडृचं दशमं सूक्तं कुत्सस्यार्षं त्रैष्टुभं सूर्यदेवताकं । तथा चानुक्रांतं । चित्रं षट् सौर्यमिति ॥ आश्विनशस्त्रे सूर्योदयादूर्ध्वं सौर्याणि सूक्तानि शंसनीयानि । तत्रेदं सूक्तं शंसनीयं । सूत्रितं च । चित्रं देवानां नमो मित्रस्येति ॥ आदितस्तिस्र ऋचः सौर्यस्य पशोर्वपापुरोडाशहविषां क्रमेणानुवाक्याः । ततो द्वे वपापुरोडाशयोर्याज्ये । तथा च सूत्रितं ॥ चित्रं देवानामुदगादनीकमिति पंच शं नो भव चक्षसा शं नो अह्ना । आ० ३. ८. । इति ॥ अतिमूर्त्तिनाम्न्येकाहे शुनासीर्ये पर्वणि च सूर्यस्य हविषश्चित्रं देवानामित्येषा याज्या । सूत्रितं च तरणिर्विश्वदर्शतश्चित्रं देवानामुदगादनीकमिति याज्यानुवाक्याः । आ० ९. ८. । इति ॥

तामेतां प्रथमामृचमाह ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अंतरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥१॥

चित्रं । देवानां । उत् । अगात् । अनीकं । चक्षुः । मित्रस्य ।
वरुणस्य । अग्नेः ।
आ । अप्राः । द्यावापृथिवी इति । अंतरिक्षं । सूर्यः ।
आत्मा । जगतः । तस्थुषः । च ॥ १ ॥

देवानां । दीव्यंतीति देवा रश्मयः । तेषां । देवजनानामेव वानीकं तेजःसमूहरूपं चित्रमाश्चर्यकरं सूर्यस्य मंडलमुदगात् । उदयाचलं प्राप्तमासीत् । कीदृशं । मित्रस्य वरुणस्याग्नेश्च । उपलक्षणमेतत् । तदुपलक्षितानां जगतां चक्षुः प्रकाशकं । चक्षुरिंद्रियस्थानीयं वा । उदयं प्राप्य च द्यावापृथिवी दिवं पृथिवीमंतरिक्षं चाप्राः । स्वकीयेन तेजसा आ समंतादपूरयत् । ईदृग्भूतमंडलांतर्वर्ती सूर्योऽतर्यामितया सर्वस्य प्रेरकः परमात्मा जगतो जंगमस्य तस्थुषः स्थावरस्य चात्मा स्वरूपभूतः । स हि सर्वस्य स्थावरजंगमात्मकस्य कार्यवर्गस्य कारणं । कारणाच्च कार्यं नातिरिच्यते । तथा च पारमर्षं सूत्रं । तदनन्यत्वमारंभणशब्दादिभ्य इति । यद्वा । स्थावरजंगमात्मकस्य सर्वस्य प्राणिजातस्य जीवात्मा । उदिते हि सूर्ये मृतप्रायं सर्वं जगत्पुनश्चेतनयुक्तं सदुपलभ्यते । तथा च श्रूयते । योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेतीति ॥ आप्राः ।

[illegible] पूर्वी। लङि पुरुषव्यत्ययः। अदादित्वाच्छपो लुक्। जगतः। गमेर्द्दे चेति क्विप् द्विर्वचनं च। गमः क्वावित्यनुनासिकलोपः। तस्थुषः। तिष्ठतेर्लिटः क्वसुः। द्विर्वचने शर्पूर्वाः खयः। षष्ठ्येकवचने वसोः संप्रसारणमिति संप्रसारणं। आतो लोप इटि चेत्याकारलोपः। शासिवसीति षत्वं ॥

द्वितीयामृचमाह ॥

सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्।
यत्रा नरो देवयंतो युगानि वितन्वते प्रति भद्राय भद्रं ॥२॥

सूर्यः । देवीं । उषसं । रोचमानां । मर्यः । न । योषां ।
अभि । एति । पश्चात् ।
यत्र । नरः । देवऽयंतः । युगानि । विऽतन्वते । प्रति ।
भद्राय । भद्रं ॥ २ ॥

सूर्यो देवीं दानादिगुणयुक्तां रोचमानां दीप्यमानामुषसं पश्चादभ्येति। उषसः प्रादुर्भावानंतरं तामभिलक्ष्य गच्छति। तत्र दृष्टांतः। मर्यो न योषां। यथा कश्चिन्मनुष्यः शोभनावयवां गच्छंतीं युवतिं स्त्रियं सततमनुगच्छति तद्वत्। यत्र यस्यामुषसि जातायां देवयंतो देवं द्योतमानं सूर्यं यष्टुमिच्छंतो नरो यज्ञस्य नेतारो यजमाना युगानि। युगशब्दः कालवाची। तेन च तत्र कर्तव्यानि कर्माणि लक्ष्यंते यथा दर्शपूर्णमासाविति। अग्निहोत्रादीनि कर्माणि वितन्वते। विस्तारयंति। यद्वा। देवयंतो देवयागार्थं धनमात्मन इच्छंतो यजमानपुरुषा

युगानि हलावयवभूतानि कर्षणाय वितन्वते। प्रसारयंति। तामुषसमनुगच्छतीत्यर्थः। एवंविधं भद्रं कल्याणं सूर्यं प्रति भद्राय कल्याणरूपाय कर्मफलाय स्तुम इति शेषः। यद्वा। देवयंती देवकामा यजमाना युगानि युग्मानि भूत्वा पत्नीभिः सहिताः संतो भद्रं कल्याणमग्निहोत्रादिकं कर्म भद्राय तत्फलार्थं प्रति प्रत्येकं यस्यामुषसि प्रवृत्तायां वितन्वते। विस्तारयंति॥ मर्याः। मृङ् प्राणत्यागे। छंदसि निष्टर्क्येत्यादौ यत्प्रत्ययांतो निपात्यते। यतोऽनाव इत्याद्युदात्तत्वं। युगानि। युजेः कर्मणि घञ्। युगशब्दः कालविशेषे रथाद्युपकरणे चेत्युञ्छादिषु पाठाद्गुणाभावोऽंतोदात्तत्वं च। वितन्वते। तनु विस्तारे। तनादिकृञ्भ्य उः। सहेति योगविभागात्तिङोप-सर्गस्य समासे सति समासस्येत्यंतोदात्तत्वं॥

तृतीयामृचमाह॥

भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः।
नमस्यंतो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यंति सद्यः॥३॥

भद्राः। अश्वाः। हरितः। सूर्यस्य। चित्राः। एतऽग्वाः।
अनुऽमाद्यासः।
नमस्यंतः। दिवः। आ। पृष्ठं। अस्थुः। परि। द्यावापृथिवी इति। यंति। सद्यः॥ ३॥

भद्राः कल्याणाः। अश्वा एतग्वा इत्येतदुभयमश्वनाम। तत्रैकं क्रियापरं योजनीयं। अश्वास्तुरगा व्यापनशीला वा

हरितो हर्तारश्विना विचित्रावयवा अनुमाद्यासोऽनुक्रमेण सर्वैः स्तुत्या मादनीयाः । एवंभूताः सूर्यस्यैतग्वा अश्वाः । यद्वा । एतं गंतव्यं मार्गं गंतारोऽश्वाः । एतं शवलवर्णं नीलवर्णं वा प्राप्नुवंतोऽश्वा नमस्यंतोऽस्माभिर्नमस्यमानाः संतो दिवोऽन्तरिक्षस्य पृष्ठमुपरिप्रदेशं पूर्वभागलक्षणमास्थुः । आतिष्ठंति प्राप्नुवंति । यद्वा । हरितो रसहरणशीला रश्मयो भद्रादिलक्षणविशिष्टा दिवः पृष्ठं नभःस्थलमातिष्ठंति । आस्थाय च द्यावापृथिवी द्यावापृथिव्यौ सद्यस्तदानीमेवैकेनाह्ना परि यंति । परितो गच्छंति । व्याप्नुवंतीत्यर्थः ॥ अश्वाः । अशू व्याप्तौ । अशिप्रुषीत्यादिना क्वन् । एतग्वाः । इण् गतौ । असिहसीत्यादिना कर्मणि तन्प्रत्ययः । गमेरौणादिको भावे डुप्रत्ययः । एतमेतव्यं प्रति ग्वो गमनं येषां ते तथोक्ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अनुमाद्यासः । मदि स्तुतौ । अस्मात्संग्रतादचो यत् । यतोऽनाव इत्याद्युदात्तत्वं । नमस्यंतः । नमोवरिव इति पूजार्थे क्यच् । व्यत्ययेन कर्मणि शतृप्रत्ययः । अस्थुः । तिष्ठतेश्छांदसो वर्तमाने लुङ् । गातिस्थेति सिचो लुक् । आत इति झेर्जुस् ॥

चतुर्थीमृचमाह ॥

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार ।

यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥४॥

तत् । सूर्यस्य । देवऽत्वं । तत् । महिऽत्वं । मध्या ।

कर्तोः । विऽततं । सं । जभार ।

यदा। इत्। अयुक्त। हरितः। सधऽस्थात्। आत्। रात्री। वासः। तनुते। सिमस्मै॥ ४॥

सूर्यस्य सर्वप्रेरकस्यादित्यस्य तद्देवत्वमीश्वरत्वं। स्वातंत्र्यमिति यावत्। महित्वं महत्त्वं माहात्म्यं च तदेव। तच्छब्दश्रुतेर्यच्छब्दाध्याहारः। यत्कर्तोः। कर्मनामैतत्। प्रारब्धापरिसमाप्तस्य कृष्यादिलक्षणस्य कर्मणो मध्या मध्येऽपरिसमाप्त एव तस्मिन्कर्मणि विततं विस्तीर्णं स्वकीयं रश्मिजालमस्तं गच्छन् सूर्यः संजभार। अस्माल्लोकात्स्वात्मन्युपसंहरति। कर्मकरस्य प्रवृत्तमपरिसमाप्तमेव विसृजत्यस्तं यंतं सूर्यं दृष्ट्वा। ईदृशं स्वातंत्र्यं महिमा च सूर्यव्यतिरिक्तस्य कस्यास्ति। न कस्यापि। सूर्य एवेदृशं स्वातंत्र्यं महिमानं चावगाहते। अपि च। इदित्यवधारणे। यदेत् यस्मिन्नेव काले हरितो रसहरणशीलान्स्वरश्मीन् हरिद्वर्णानश्वान्वा सधस्थात्सहस्थानादस्मात्पार्थिवाल्लोकादादायायुक्त। अन्यत्र संयुक्तान्करोति। यद्वा युजिः केवलोऽपि विपूर्वो द्रष्टव्यः। यदैवासौ स्वरश्मीनश्वान्वा सधस्थात्। सह तिष्ठंत्यस्मिन्निति सधस्थो रथः। तस्मादयुक्त। अमुंचत्। आत् अनंतरमेव रात्री निशा वास आच्छादयितृ तमः सिमस्मै। सिमशब्दः सर्वशब्दपर्यायः। सप्तम्यर्थे चतुर्थी। सर्वस्मिन् लोके तनुते। विस्तारयति। यद्वा वासो वासरमहः। तत्सर्वस्माल्लोकादपनीय रात्री तमस्तनुते॥ अत्र निरुक्तं। तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते यदासावयुंक्त हरणानादित्यरश्मीन्हरितोऽश्वानिति वाथ रात्री वासस्तनुते सिमस्मै वासरमहरवयुवती सर्वस्मात्।

नि० ४. ११. । इति ॥ महित्वं । मह पूजायां । औणादिक इन्प्रत्ययः । तस्य भावस्त्वतलौ । मध्या । मध्यशब्दात्सप्तम्येकवचनस्य सुपां सुलुगिति डादेशः । कर्तोः । करोतेरौणादिकस्तोसुन्प्रत्ययः । विततं । विपूर्वात्तनोतेः कर्मणि निष्ठा । उदित्त्वेन क्त्वाप्रत्यय इटो विकल्पनाद्यस्य विभाषेतीट्प्रतिषेधः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । जभार । हृग्रहोर्भ इति भत्वं । अयुक्त । युजेर्लुङि झलो झलीति सिचो लोपः । सधस्थात् । घञर्थे कविधानमित्यधिकरणे कप्रत्ययः । सधमादस्थयोश्छंदसीति सधादेशः । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं । रात्री । रात्रेश्चाजसाविति ङीप् ॥

पंचमीमृचमाह ॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे ।
अनंतमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरंति ॥ ५ ॥

तत् । मित्रस्य । वरुणस्य । अभिऽचक्षे । सूर्यः । रूपं ।
कृणुते । द्योः । उपऽस्थे ।
अनंतं । अन्यत् । रुशत् । अस्य । पाजः । कृष्णं । अन्यत् ।
हरितः । सं । भरंति ॥ ५ ॥

तत्तदानीमुदयसमये मित्रस्य वरुणस्यैतदुभयोपलक्षितस्य सर्वस्य जगतोऽभिचक्षे आभिमुख्येन दर्शनाय द्योर्नभस उपस्थे उपस्थाने मध्ये सूर्यः सर्वस्य प्रेरकः सविता रूपं सर्वस्य निरूपकं प्रकाशकं तेजः कृणुते । करोति । अपि च । अस्य सूर्यस्य

हरितो रसहरणशीला रश्मयो हरिद्वर्णा अश्वा वानंतमवसान-रहितं कृत्स्नस्य जगतो व्यापकं रुशद्दीप्यमानं श्वेतवर्णं पाजः । बलनामैतत् । बलयुक्तमतिबलस्यापि नैशस्य तमसो निवारणे समर्थमन्यत्तमसो विलक्षणं तेजः संभरंति । अहनि स्वकीया-गमनेन निष्पादयंति । तथा कृष्णं कृष्णवर्णमन्यत्तमः स्वकीया-पगमनेन रात्रौ । अस्य रश्मयोऽप्येवं कुर्वंति किमु वक्तव्यं तस्य माहात्म्यमिति सूर्यस्य स्तुतिः ॥ अभिचक्षे । संपदादि-लक्षणो भावे क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं । द्योः । ङसि-ङसोश्च । पा० ६. १. ११०. । इति पूर्वरूपता । उपस्थे । घञर्थे कविधानमिति कप्रत्ययः । भरुहवादित्वात्पूर्वपदांतो-दात्तत्वं । पाजः पाति रक्षतीति पाजो बलं । पातेर्बले जुट् च । उ० ४. २०४. । इत्यसुन् जुडागमश्च । छांदसो मत्वर्थी-यस्य विनो लोपः ॥

षष्ठीमृचमाह ॥

अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात् ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी
उत द्यौः ॥ ६ ॥

अद्य । देवाः । उत्ऽइता । सूर्यस्य । निः । अंहसः ।
पिपृत । निः । अवद्यात् ।
तत् । नः । मित्रः । वरुणः । ममहंतां । अदितिः । सिंधुः ।
पृथिवी । उत । द्यौः ॥ ६ ॥

पुरा यद्यदा सूरः सूर्यस्तमस्तमोरूपस्य शुष्णस्यासुरस्यापीतेः संग्रामान्मुक्तोऽभवदीति शेषः। तदानीं हे अद्रिवः। आदृणात्यनेनेत्यद्रिर्वज्रः। तद्वन्निंद्र तं फलिगं। मेघनामैतत्। मेघरूपेणावृण्वंतं हेतिं हंतारं शुष्णमसुरमस्य। निरशितवानसि। यद्वा। अस्य शुष्णस्यासुरस्य हेतिं हननसाधनमायुधं फलिगं मेघलक्षणं प्राभांक्षीरिति शेषः। तथा शुष्णस्य चित् शोषयितुरसुरस्य च यदोज आच्छादकं बलं दिवस्परि द्योतमानस्य सूर्यस्योपरि परिस्थितमाच्छादितं सुग्रथितं सुष्ठु सूर्ये सक्तं तदोजस्तस्मात्सूर्यादादः। आदृणाः। विश्लिष्टं कृतवानसीत्यर्थः॥ अद्रिवः। छंदसीर इति मतुपो वत्वं। मतुवसो रुरिति नकारस्य रुत्वं। हेतिं। कृत्यल्युटो बहुलमिति बहुलवचनाद्धंतेः कर्तरि क्तिन्। ऊतियूतीत्यादौ निपातनाद्रूपसिद्धिरंतोदात्तत्वं च। अस्य। असु क्षेपणे। लटः सिप्। तस्य व्यत्ययेन ह्यादेशः। अतो हेरिति हेर्लुक्। दिवस्परि। पंचम्याः परावध्यर्थे इति विसर्जनीयस्य सत्वं। अदः। दॄ विदारणे। लङि सिप्। बहुलं छंदसीति विकरणस्य लुक्। गुणे हल्ङ्याब्भ्य इति सिलोपः॥

॥ इति प्रथमस्याष्टमे पंचविंशो वर्गः॥

एकादशीमृचमाह॥

अनु॑ त्वा म॒ही पाज॑सी अच॒क्रे द्यावा॒क्षामा॑ मदता॒मिंद्र॒ कर्म॑न्।

त्वं वृ॒त्रमा॒शया॑नं सि॒रासु॑ म॒हो वज्रे॑ण सिष्वपो व॒राहु॑म्॥११॥

अनु । त्वा । मही इति । पाजसी इति । अचक्रे इति ।

द्यावाक्षामा । मदतां । इंद्र । कर्मन् ।

त्वं । वृत्रं । आऽशयानं । सिरासु । महः । वज्रेण । सिष्वपः ।

वराहुं ॥ ११ ॥

हे इंद्र मही मह्यौ महत्यौ पाजसी बलवत्यावचक्रे अचक्रमाणे सर्वत्र व्याप्य वर्तमाने द्यावाक्षामा द्यावापृथिव्यौ कर्मन् वृत्रवधादिलक्षणे कर्मणि प्रवृत्तं त्वामनु मदतां। हृष्टमकुरुतां। अन्वमन्येतां वा। तथा च तैत्तिरीयकं। स आभ्यामेव प्रसूत इंद्रो वृत्रमहन्निति। तदनंतरं त्वमाशयानं आ समंताद्व्याप्य वर्तमानं वराहुं वराहारं वृत्रमसुरं सिरासु सरणशीलास्वप्सु महो महता वज्रेण हत्वा सिष्वपः। अस्वापयः। पातितवानित्यर्थः॥ मही। सुपां सुलुगिति विभक्तेः पूर्वसवर्णदीर्घः। पाजसी। पाजस्शब्दो बलवाचको लक्षणयात्र तद्वति वर्तते। इयाडियाजीकाराणामुपसंख्यान-मिति विभक्तेरीकारादेशः। द्यावाक्षामा। द्यौश्च क्षामा च। दिवो द्यावेति द्यावादेशः। देवताद्वंद्वे चेत्युभयपदप्रकृति-स्वरत्वं। सुपां सुलुगिति विभक्तेर्लुक्। मदतां। मदी हर्षे। व्यत्ययेन शप्। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। महः। महता। करणे शेषत्वेन विवक्षिते षष्ठी। अच्छब्दलोप-श्छांदसः। सिष्वपः। ञिष्वप् शये। अस्मात्स्वंतात् लुङि चङि संज्ञापूर्वकस्य विधेरनित्यत्वात् स्वापेश्चङि। पा० ६. १. १८.। इति संप्रसारणं न क्रियते ॥

द्वादशीमृचमाह ॥

त्वमिंद्र नर्यो याँ अवो नृन्तिष्ठा वातस्य सुयुजो वहिष्ठान् ।
यं ते काव्य उशना मंदिनं दाद्वृत्रहणं पार्यं ततक्ष वज्रं ॥१२॥

त्वं । इंद्र । नर्यः । यान् । अवः । नृन् । तिष्ठ । वातस्य ।
सुऽयुजः । वहिष्ठान् ।
यं । ते । काव्यः । उशना । मंदिनं । दात् । वृत्रऽहनं ।
पार्यं । ततक्ष । वज्रं ॥ १२ ॥

हे इंद्र नर्यो नृभ्यो हितस्त्वं यान्नृन्नेतृनश्वानवः । अवसि रक्षसि । तान्वातस्य तुल्यान् तद्वच्छीघ्रं गच्छतः सुयुजः शोभनं रथेन युज्यमानान्वहिष्ठान् अतिशयेन वोढृनश्वान्तिष्ठ । आरोहेत्यर्थः । काव्यः कवेः पुत्र उशना मंदिनं मदकरं यं वज्रं ते तुभ्यं दात् । दत्तवान् । तं वज्रं वृत्रहणं वृत्रस्यासुरस्य घातकं पार्यं शत्रूणां पारणेऽतिक्रमणे समर्थं च ततक्ष । तनूकृतवानसि ॥ अवः । अवतेर्लङ्यडागमः । इतश्च लोप इतीकारलोपः । वहिष्ठान् । वोढृशब्दात्तुश्छंदसीतीष्ठन् । तुरिष्ठेमेयःस्विति तृलोपः । पार्यं । पार तीर कर्मसमाप्तौ । अस्माण्ण्यंतादचो यदिति यत् । ततक्ष । तक्षू त्वक्षू तनूकरणे । पुरुषव्यत्ययः ॥

त्रयोदशीमृचमाह ॥

त्वं सूर्यो हरितो रामयो नृन्भरच्चक्रमेतशो नायमिंद्र ।
प्रास्य पारं नवतिं नाव्यानामपि कर्तमवर्तयोऽयज्यून् ॥१३॥

त्वं । सूरः । हरितः । रमयः । नृन् । भरत् । चक्रं ।

एतशः । न । अयं । इंद्र ।

प्रऽअस्य । पारं । नवतिं । नाव्यानां । अपि । कर्त्तं ।

अवर्तयः । अयज्यून् ॥ १३ ॥

हे इंद्र सूरः सूर्यात्मना वर्तमानस्त्वं हरितो हरिद्वर्णान्नेतॄनश्वान् । यद्वा रसहरणशीलान् रश्मीन् रामयः । उपारमयः । एतशो न । एतश इति सूर्याश्वस्याख्या । तथा च श्रूयते । एतशेन त्वा सूर्यो देवता गमयत्विति । नशब्दः सार्थे । एतशस्य रथस्य चक्रं भरत् । प्रावहत् । अपि च । त्वं नाव्यानां नावा तार्याणां नदीनां नवतिं नवतिसंख्यामतीत्य वर्तमानं पारं तीरदेशं । सप्तमर्थे द्वितीया । तीरदेशेऽयज्यून् अयजमानान् यज्ञविहीनानसुरादीन् प्रास्य प्रक्षिप्य तत्र कर्तमवर्तयः । कर्तव्यमपि ज्ञात्वा तानयजमानानवर्तयः । प्रापयः ॥ रामयः । लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । अन्येषामपि दृश्यत इति सांहितिको दीर्घः । प्रास्य । असु क्षेपणे । अस्मात् ल्यपि रूपं । नाव्यानां । नौवयोधर्मेत्यादिना यत् । तित्स्वरित इति स्वरितत्वं ॥

चतुर्दशीमृचमाह ॥

त्वं नो अस्या इंद्र दुर्हणायाः पाहि वज्रिवो दुरितादभीके ।

प्र नो वाजान्रथ्यो३ अश्वबुध्यानिषे यंधि श्रवसे सूनृतायै ॥ १४ ॥

त्वं। नः। अस्याः। इंद्र। दुःऽहनायाः। पाहि। वज्रिऽवः।

दुःऽइतात्। अभीके।

प्र। नः। वाजान्। रथ्यः। अश्वऽबुध्यान्। इषे। यंधि।

श्रवसे। सूनृतायै॥ १४॥

हे वज्रिवो वज्रवन्निंद्र त्वं दुर्हणाया दुःखेन हंतव्याया अस्या अप्रवृत्तेर्दारिद्र्यान्नोऽस्मान्पाहि। रक्ष। तथा। दुरितात्पापादभीकेऽभिप्राप्ते समीपवर्तिनि संग्रामेऽस्मान्रक्ष। अपि च। नोऽस्मभ्यं रथ्यो रथयुक्तान् अश्वबुध्यान् अश्वानां बोधवान्। अश्वा यावद्भिर्लभ्यंते तावदित्यर्थः। यद्वा। अश्वबुध्यान्। छांदसो वर्णविकारः। अश्वमूलान् अश्वप्रमुखानित्यर्थः। सर्वं हि धनमश्वमूलं दासापवर्गं। यथोक्तं दासप्रवर्गं रयिमश्वबुध्यमिति। एवंविधान्वाजान् धनानि प्रयंधि। प्रयच्छ। किमर्थं। इषे। अन्नार्थं। श्रवसे। कीर्त्यर्थं। सूनृतायै। सूनृता प्रियसत्यात्मिका वाक्। तदर्थं च। दुर्हणायाः। ईषद्दुःसुष्विति हंतेः कर्मणि खल्। पाहि। पादादित्वान्निघाताभावः। वज्रिवः। वज्रोऽस्यास्तीति वज्री हस्तः। तद्वान् वज्रिवान्। छंदसीर इति मतुपो वत्वं। संबुद्धौ मतुवसो रुरिति नकारस्य रुत्वं। रथ्यः। छांदसोवनिपावितिरथशब्दान्मत्वर्थीय ईकारः। यंधि। यम उपरमे। बहुलं छंदसीति विकरणस्य लुक्। वा छंदसीति हेः पित्त्वेन ङित्त्वाभावादङितश्चेति हेर्धिः॥

पंचदशीमृचमाह ॥

मा सा ते अस्मत्सुमतिर्वि दसद्वाजप्रमहः समिषो वरंत
आ नो भज मघवन्गोष्वर्यो मंहिष्ठास्ते सधमादः स्याम ॥१५॥

मा । सा । ते । अस्मत् । सुऽमतिः । वि । दसत् । वाजऽप्रमहः ।
सं । इषः । वरंत ।
आ । नः । भज । मघऽवन् । गोऽषु । अर्यः । मंहिष्ठाः ।
ते । सधऽमादः । स्याम ॥ १५ ॥

हे वाजप्रमहः । वाजैर्धनैः प्रमहनीयेंद्र ते त्वदीया सा सुमतिः शोभनानुग्रहरूपा बुद्धिरस्मत् अस्मासु मा विदसत् । मा विशुष्यतु । तथेषोऽन्नान्यस्मान् संवरंत । संवृतान्कुर्वंतु । हे मघवन् धनवन्निंद्र अर्यो धनपतिस्त्वं नोऽस्मान् गोष्वाभज । प्रापय । ते तव मंहिष्ठा अतिशयेन स्तुतिभिः प्रवर्धयितारो वयं सधमादः । स्याम । पुत्रपौत्रादिभिः सह माद्यंतो भवेम ॥ अस्मत् । सुपां सुलुगिति सप्तम्या लुक् । दसत् । दसु उपक्षये । माङि लुङि पुषादित्वादङ् । वाजप्रमहः । वाजैर्धनैः प्रकृष्टं महस्तेजो यस्य च तथोक्तः । पादादित्वादाष्टमिकनिघाताभावः । षाष्ठिकमामंत्रिताद्युदात्तत्वं । वरंत । वृञ् वरणे । व्यत्ययेन शप् । गोषु । सावेकाच इति प्राप्तस्य विभक्त्युदात्तत्वस्य न गोश्वन् सावर्णेति प्रतिषेधः । अर्यः स्वामिवैश्ययोरिति निपात्यते । अर्यस्य स्वाम्याख्या चेदित्यंतोदात्तत्वं । मंहिष्ठाः । महि वृद्धौ । इदित्वान्नुम् । अस्मादंतर्भावितण्यर्थात्तृच् । तुश्छंदसीतीष्ठन् ।

तुरिष्ठेमेयःस्विति तलोपः। सधमादः। मद तृप्तियोगे। चौरादिकः। सह मादयंते तृप्ता भवतीति सधमादः। क्विप् चेति क्विप्। जस्। सध मादस्थयोश्छंदसीति सहस्य सधादेशः॥

॥ इति प्रथमस्याष्टमे षड्विंशो वर्गः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीर-बुक्कभूपालसाम्राज्य धुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टकेऽष्टमोऽध्यायः समाप्तः॥

॥ प्रथमाष्टकः समाप्तः॥

---

अग्निः । होता । दास्वतः । क्षयस्य । वृक्तऽबर्हिषः ।

सं । यज्ञासः । चरंति । यं । सं । वाजासः । श्रवस्यवः ॥ २

यमग्निं यज्ञासः सर्वे यज्ञाः संचरंति संहिता गच्छंति । श्रवस्यवो यजमानस्य प्रभूतां कीर्तिं संपादयंतो वाजासो हवींषि यमग्निं संचरंति प्राप्नुवंति । एवं-विशिष्टोऽग्निर्दास्वतो हविःप्रदानपश्वादिदानवतो वृक्तबर्हिषः । वृक्तानि लूनानि बर्हींषि दर्भा येनासौ वृक्तबर्हिः । तस्य क्षयस्य । क्षियंति निवसंत्यस्मिन् [illegible] धन-फलानीति क्षयः । तस्य यजमानस्य यागार्थं होता देवानामाह्वाता भवति ॥ दास्वतः । दा दाने । क्वसुप्रत्ययांतः । मतुपोऽदुपधात्वाद्वत्वं । धातुस्वरेणाद्युदात्त एव । क्षयस्य । क्षि निवासगत्योः । क्षयो निवास इत्याद्युदात्तत्वं । वृक्तबर्हिषः । वृजी वर्जने । वर्जनमत्रोपचाराच्छेदनं । निष्ठा । प्रत्ययस्वरेणांतोदात्तः । बहुव्री-हित्वात्पूर्वपदप्रकृतिस्वरत्वं । यज्ञासः । यज्ञशब्दो यजयाचेत्यादिना नङ्प्रत्ययांतो-ऽन्तोदात्तः । चरंति । चर गतिभक्षणयोः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वं । यद्वृत्तान्नित्यमिति निघाताभावः । वाजासः । वजेर्घञ् । वाजः । कर्षात्वत इत्यंतो-दात्तत्वं । छांदसत्वात् ञ्नित्यादिर्नित्यमित्याद्युदात्तः । श्रवस्यवः । छंदसि परेच्छाया-मिति क्यच् । क्याच्छंदसीत्युप्रत्ययः । प्रत्ययस्वरेणांतोदात्तः ॥

॥ अथ तृतीया ॥

उत स्म यं शिशुं यथा नवं जनिष्टारणी ।
धर्तारं मानुषीणां विशामग्निं स्वध्वरं ॥ ३

उत । स्म । यं । शिशुं । यथा । नवं । जनिष्ट । अरणी इति ।
धर्तारं । मानुषीणां । विशां । अग्निं । सुऽअध्वरं ॥ ३

[illegible] अपि च मानुषीणां मनोर्जातानां विशां । विशंति प्रविशंति गर्भांस्व-[illegible] प्रजाः । तासां धर्तारमाहारादिपाकद्वारेण शरीरधातूनां पोषकं [illegible] अनयस्त्वं यमग्निमरणी द्वे अरणी नवं नूतनं शिशुं यथा अपत्यमिव [illegible] जनिषातां । अरणी प्रजानां पोषणार्थं चैतमग्निमसृजतामित्यर्थः ॥

शिशुं । शो तनूकरणे । आदेच इत्यादिना आत्वं । शः कित्सन्वच्चेत्युप्रत्ययः सन्वद्भा-
वश्च । द्विर्भावोऽभ्यासस्य ह्रस्वश्च । सन्यत इतीत्वं । आतो धातोरित्याकारलोपः ।
निपातस्याद्युदात्तः । अध । अधेति पदांत इति सर्वानुदात्तः । जनिष्ट । जनी
प्रादुर्भावे । लुङ् । छांदसत्वाद्वचनव्यत्ययः । अरणी ऋ गतौ । अर्तिसृधृधम्यश्यवि-
तृभ्योऽनिरित्यनिप्रत्यय आद्युदात्तः । आभ्यां मथितं गच्छत्यग्निरित्यरणी । करणापादा-
नार्थे औणादिकोऽनिः । ताभ्यामन्यत्रोणादयः । पा० ३. ४. ७५. । इति नियमाद्गौ-
रादित्वात् ङीष् । मानुषीणां । मनोर्जातावञ्यतौ षुक्चेत्यञ्प्रत्ययः षुगागमश्च ।
ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं । विशां । विश प्रवेशने । कर्तरि क्विप् । सावेकाचः
इति विभक्तेरुदात्तत्वं । स्वध्वरं । हिंसार्थस्य ध्वरतेः पचाद्यच् । न विद्यते ध्वरो
यागहिंसा यस्मिन्नित्यध्वरः । बहुव्रीहिस्वरापवादत्वेन नञ्सुभ्यामित्यंतोदात्तः ॥

॥ अथ चतुर्थी ॥

उत स्म दुर्गृभीयसे पुत्रो न ह्वार्याणां ।

पुरु यो दग्धासि वनाग्ने पशुर्न यवसे ॥ ४

उत । स्म । दुःऽगृभीयसे । पुत्रः । न । ह्वार्याणां ।

पुरु । यः । दग्धा । असि । वना । अग्ने । पशुः । न ।

यवसे ॥ ४

उत स्म अपि च ह्वार्याणां कुटिलं गच्छतां सर्पाणां । यद्वा आस्कंदितादि
विशेषेण वक्रगमनानामश्वानां पुत्रो न पुत्र इव बालसर्प इव । अशिक्षितबाला
इव त्वं दुर्गृभीयसे । दुःखेन गृह्यसे । हे अग्ने यस्त्वं पुरु बहूनि वना वनानि दग्धासि
दाहको भवसि । कथमिव । यवसे तृणे पशुर्न पशुरिव । अयमर्थः । यथात्यंतक्षुधार्तः
पशुस्तृणविषये विसृष्टः सन् यथा सर्वं भक्षयति तद्वदित्यर्थः ॥ दुर्गृभीयसे । ग्र
उपादाने । यक् । ग्रुध इंडित्यनुवृत्तौ बहुलं छंदसीतीडागमः । ग्र
संप्रसारणं । हृग्रहोर्भश्छंदसीति भकारः निपातः । ह्वार्याणां । हृ
ऋहलोर्ण्यत् । आदिवृद्धिः । तित्स्वरितमिति स्वरितत्वं । पुरु । पॄ पा
पॄभिदिव्यधिगृधिधृषिहृषिभ्य इति कुप्रत्ययः । उदोष्ठ्यपूर्वस्येत्युत्वं । प्र
दात्तत्वं । असि । यद्वृत्तान्नित्यमिति न निघातः ॥

॥ अथ पंचमी ॥

अध स्म यस्यार्चयः सम्यक् संयंति धूमिनः।

यदीमह त्रितो दिव्युप ध्मातेव धमति शिशीते ध्मातरी यथा ॥ ५

अध। स्म। यस्य। अर्चयः। सम्यक्। संऽयंति। धूमिनः।

यत्। ईं। अह। त्रितः। दिवि। उप। ध्माताऽइव। धमंति।

शिशीते। ध्मातरि। यथा ॥ ५

अध स्म अपि च धूमिनो धूमवतो यस्याग्नेरर्चयोऽर्चींषि सम्यक् शोभनं संयंति सर्वतः प्राप्नुवंति त्रिष्वपि स्थानेषु ततो व्याप्तः त्रीणि स्थानानि यातीत्य दिव्यंतरिक्षे यद्यदा ईमयमात्मानमुपधमति उपवर्धयति तदा ज्वालाः कुर्वंतो निर्गच्छंतीत्यर्थः। कथमिव। ध्मातेव। कर्मारो यथा भस्त्रादिभिरग्निं संवर्धयति तद्वत्स्वात्मानं वर्धयतीत्यर्थः। किंच ध्मातरि यथा। यथा ध्मातृसमीपे विद्यमानोऽग्निस्तेन ध्मायमान आत्मानं शिशीते तीक्ष्णीकरोति तद्वत्स्वयमेव स्वात्मानं तीक्ष्णीकरोतीत्यर्थः। अहेति पादपूरणः॥ यंति। इण् गतौ। यद्वृत्तयोगान्निघाताभावः। शिशीते। शो तनूकरणे। व्यत्ययेनात्मनेपदी। श्नाविवत्यनुवर्तमाने बहुलं छंदसीति विकरणस्य श्लुः। आदेच उपदेशे शितीत्यात्वं। श्लाविति द्विर्वचनं। बहुलं छंदसीत्यभ्यासस्येत्वं। अभ्यस्तसंज्ञायामात ई हल्यघोरितीत्वं। तिङ उत्तरत्वान्निघाताभावः॥

॥ अथ षष्ठी ॥

तवाहमग्न ऊतिभिर्मित्रस्य च प्रशस्तिभिः।

द्वेषोयुतो न दुरिता तुर्याम मर्त्यानां ॥ ६

तव। अहं। अग्ने। ऊतिऽभिः। मित्रस्य। च। प्रशस्तिऽभिः।

द्वेषःऽयुतः। न। दुःऽइता। तुर्याम। मर्त्यानां ॥ ६

हे अग्ने मित्रस्य सर्वेषां मित्रभूतस्य तवोतिभिर्युष्मत्कर्तृकरक्षणैरहमप्रशस्तिभिस्त्वत्कृतैः स्तोत्रैश्च मर्त्यानां मर्त्यभूतानां मनुष्याणां दुरिता दुरितानि तत्कृतं-

कानि पापसाधनकर्माणि द्वेषोयुतो न द्वेषयुक्तान् शत्रूनिव तुर्याम । तरेम । अयमर्थः । त्वद्रक्षणैस्त्वत्संबंधिस्तुतिभिश्च बाह्याभ्यंतरशत्रून् तरेयमित्यर्थः ॥ ऊतिभिः । अव रक्षणे । क्तिन् । ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यूठ् । ऊतियूतिजूतीति चेतिक्तिनोंतोदात्तो निपातितः । प्रशस्तिभिः । शंसु स्तुतौ । क्तिन् । कृदुत्तरपदप्रकृतिस्वरापवादत्वेन तादौ च निति कृत्यताविति गतेरुदात्तत्वं । द्वेषोयुतः । द्विष अप्रीतौ । भावेऽसुन्प्रत्ययः । यु मिश्रणे । कर्तरि क्विप् । तुक् । कृदुत्तरपदप्रकृतिस्वरत्वं । तुर्याम । तॄ प्लवनतरणयोः प्रार्थनायां लिङ् । यासुट् । लिङः सलोपोऽनंत्यस्येति सकारलोपः । बहुलं छंदसीति शपो लुक् । उदोष्ठ्यपूर्वस्य बहुलं छंदसीत्युत्वं । यासुडागमस्योदात्तत्वाच्छेषनिघातः । अपादादाविति प्रतिषेधान्निघाताभावः ॥

## ॥ अथ सप्तमी ॥

तं नो अग्ने अभी नरो रयिं सहस्व आ भर ।

स क्षेपयत्स पोषयद्भुवद्वाजस्य सातय उतैधि पृत्सु नो वृधे ॥ ७ ॥

तं । नः । अग्ने । अभि । नरः । रयिं । सहस्वः । आ । भर ।

सः । क्षेपयत् । सः । पोषयत् । भुवत् । वाजस्य । सातये ।

उत । एधि । पृत्ऽसु । नः । वृधे ॥ ७

हे अग्ने सहस्वो बलवन्नरो हविषां नेतारो नोऽस्माकं तं रयिं लोके प्रसिद्धं पश्वादिलक्षणं धनमभ्याभर धनमभ्याभर । आभिमुख्येनाहर । पूर्वोक्तः सोऽग्निः क्षेपयत् । अस्मदीयान् शत्रून् क्षेपयतु । सोऽग्निः पोषयत् । अस्मान्पोषयतु । वाजस्यान्नस्य सातये लाभाय भुवत् । भवतु । उत अपि च हे अग्ने पृत्सु पृतनासु युद्धेषु नोऽस्माकं वृधे समृद्धये एधि । भव । संग्रामे शत्रुविजयार्थं स त्वं समृद्धिं कुर्वित्यर्थः ॥ सहस्वः । षह मर्षणे । असुन् सहत्यनेन शत्रूनिति सहो बलं । मतुप् । मादुपधा[याः] इति वत्वं । मतुवसो रुः संबुद्धौ छंदसीति रुत्वं । आमंत्रितस्य चेति नि[घातः] । क्षेपयत् । क्षिप प्रेरणे । णिजंताल्लेट् । इतश्च लोपः लेटोऽडाटावित्य[डागमः ।] शप्गुणायादेशौ पररूपत्वं च । पोषत् । पुष पुष्टौ । भुवत् । भू सत्तायां । क्ङिति चेति गुणप्रतिषेधः । उवङ् । एधि । अस भुवि । घ्वसोरेद्धावभ्यासलोप[श्चेति]

भस्यासिद्धत्वादुकारस्यो छेर्धिरिति धिरादेशः। निघातः। एत्सु पदादिष्वित्यादिना पृतनाशब्दस्य पृदादेशः। सावेकाच्त्वादंतोदात्तत्वं ॥

॥ इति चतुर्थस्य प्रथमे प्रथमो वर्गः ॥

अग्न ओजिष्ठमिति सप्तर्चं दशमं सूक्तं। ऋष्यादि विनियोगश्च पूर्ववत्। चतुर्थी-सप्तम्यौ पंक्ती। अग्न ओजिष्ठमंत्याचतुर्थ्यौ चेत्यनुक्रांत ॥

॥ तत्र प्रथमा ॥

अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो।

प्र नो राया परीणसा रत्सि वाजाय पंथां ॥ १

अग्ने। ओजिष्ठं। आ। भर। द्युम्नं। अस्मभ्यं। अध्रिगो।

इत्यध्रिगो।

प्र। नः। राया। परीणसा। रत्सि। वाजाय। पंथां ॥ १

हे अग्ने ओजिष्ठं बलवत्तमं द्युम्नं। द्योतते कटकमुकुटादिरूपेण सर्वं प्रकाशत इति द्युम्नं धनं। अस्मभ्यमाभर। आहर। हे अध्रिगो अधृतगमन। अधृतमप्रतिहतं गमनं यस्येत्यधृता अनिवारिता गावो रश्मयो यस्येति वाधृतगुरध्रिगुः। तस्य संबोधनं। नोऽस्मान् परीणसा परितो व्यापकेन राया धनेन प्रकर्षेण योजय। वाजायान्नलाभाय पंथां पंथानमन्नस्य सत्समीपप्राप्तिसाधनं मार्गं रत्सि विलिख। कुर्वित्यर्थः ओजिष्ठं॥ उब्ज आर्जवे। उब्जेर्बलोपश्चेत्यसुन् बलोपश्च। गुणः। ओजः। तदस्यास्तीत्यर्थेऽस्मायामेधेत्यादिना विनिः। अतिशायन इष्ठन्। विन्मतोर्लुक्। टेरिति टिलोपः। नित्वादाद्युदात्तः। द्युम्नं। द्युत दीप्तावित्यस्माद्धातोः सुम्नद्युम्ननिम्नेत्यादिना। नक्प्रत्ययो मकारश्चांतादेशो निपात्यते। प्रत्ययस्वरेणांतोदात्तः। अध्रिगो। अधृतशब्दस्य अध्रादेशः। गोस्त्रियोरुपसर्जनस्य ह्रस्वत्वं। आमंत्रितस्य निघातः। परीणसा। णस कौटिल्येऽत्र व्याप्त्यर्थो धातूनामनेकार्थत्वात्। संपदादिलक्षणो भावे क्विप्। परि प्राप्तं नस् व्यापनं यस्य तत्तथोक्तं। प्रमासेऽपीति णत्वं। अत्र प्रापणक्रियया युक्तस्य परेर्णसतिं प्रत्युपसर्गसंज्ञा क्रियायुक्ताश्च प्रति गत्युपसर्गसंज्ञाः। पा० १. ४. ६०. २.। इति न्यायात्। णत्वं। एवं तद्ध्युपसर्गाद्बहुलमिति वचनात् णसो णत्वं भविष्यति। इत्ति पूर्वपदस्य दीर्घः। बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरत्वं। रत्सि।

रद विलेखने । भौवादिकः । बहुलं छंदसीति शपो लुक् । पादादित्वान्निघाता-
भावः । पंथां । द्वितीयैकवचन इतोऽत् सर्वनामस्थान इत्यत् । नकारलोपश्छांदसः ।
पथिमथोः सर्वनामस्थान इत्याद्युदात्तत्वं ॥

॥ अथ द्वितीया ॥

त्वं नो अग्ने अद्भुत क्रत्वा दक्षस्य मंहना ।

त्वे असुर्यं१ मारुहत्क्राणा मित्रो न यज्ञियः ॥ २

त्वं । नः । अग्ने । अद्भुत । क्रत्वा । दक्षस्य । मंहना ।

त्वे इति । असुर्यं । आ । अरुहत । क्राणा । मित्रः । न ।

यज्ञियः ॥ २

हे अग्ने अद्भुत सामर्थ्यातिशयेन सर्वेषामाश्चर्यभूत त्वं नोऽस्माकं क्रत्वा कर्म-
णास्मत्कृतेन यज्ञादिव्यापारेण प्रीतः सन् दक्षस्य बलस्य धनस्य वा मंहना मंहनं
नाम दानं कुर्विति शेषः । यतः कारणात्त्वे त्वय्यसुर्यमसुरघ्नं बलमारुहत् आरूढं
अतो मित्रो न सूर्य इव यज्ञियो यज्ञार्हस्त्वं क्राणा यज्ञघातकराक्षसापनोदन-
लक्षणानि कर्माणि कुर्वाणो भव ॥ अद्भुत । आमंत्रितस्याद्युदात्तत्वं क्रत्वा । डुकृञ्
करणे । कृञः कतुरिति कतुप्रत्ययः । ककारो गुणवृद्धिप्रतिषेधार्थः । यणादेशः ।
क्रतुः कर्म । तृतीयैकवचने जसादिषु वावचनमिति वचनाद्घ्यभावाभावः । दक्षस्य ।
दक्ष गतिहिंसनयोः दक्ष्यंते हिंस्यंतेऽनेन शत्रव इति दक्षं बलं । करणाधिकर-
णयोश्चेति घञ् । ञित्वादाद्युदात्तः । मंहना । मंहतिर्दानकर्मा । सुपां सुलुगित्या
कारादेशः । त्वे । सुपां सुलुगित्यादिना ङेः शेआदेशः । शस्वादेशत्वादनुदात्तः ।
त्वमदः प्रत्ययस्वरेणांतोदात्तः । एकादेश उदात्तेनोदात्त इत्येकादेशस्योदात्तत्वं
आरुहत् । रुहेर्धातोर्लुङि कृमृदृरुहिभ्यश्छंदसीति च्लेरङादेशः । ङित्वाद्गुणा
क्राणा । डुकृञ् करणे । शानच् । बहुलं छंदसीति विकरणस्य लुक् । यण्
सुपां सुलुगित्यात्वं । चित इत्यंतोदात्तः । यज्ञियः । यज्ञमर्हतीत्यस्मिन्
त्विंभ्यां घखञाविति घः । प्रत्ययस्वरेणांतोदात्तः ॥

॥ अथ तृतीया ॥

त्वं नो अग्न एषां गयं पुष्टिं च वर्धय।
ये स्तोमेभिः प्र सूरयो नरो मघान्यानशुः ॥ ३

त्वं। नः। अग्ने। एषां। गयं। पुष्टिं। च। वर्धय।
ये। स्तोमेभिः। प्र। सूरयः। नरः। मघानि। आनशुः ॥ ३

हे अग्ने त्वमेषां नस्तोत्रादिकानामस्माकं गयं। गम्यते निवासायेति गयं गृहं गीयते स्तूयत इति वा गयं धनं। पुष्टिं च गवादिविषयां पुष्टिं च वर्धय। प्रापय। वृद्धिं प्रापय। ये लोके प्रसिद्धाः सूरयो लब्धवर्णा नरः स्तोतारो मनुष्याः स्तोमेभिः स्तोमैः स्तोत्रैर्मघानि मंहनीयानि गवादिधनानि यथा प्रानशुः प्राप्नुवन् तद्वद्वयमपी-त्यर्थः ॥ गयं। गृहपक्षे गमेरन्नादयश्चेति यत्प्रत्ययान्तो मकारलोपश्च निपात्यते। धनपक्षे गा स्तुतौ। अघ्न्यादयश्चेति यत्प्रत्ययः। युक्तं। यतोऽनाव इत्याद्युदात्तत्वं। पुष्टिं। पुष पुष्टौ। स्त्रियां क्तिन्। छांदसत्वादंतोदात्तत्वं। स्तोमेभिः। ष्टुञ् स्तुतौ। अर्तिस्तुसु इत्यादिना मन्। गुणः। नित्त्वादाद्युदात्तः। आनशुः। अशू व्याप्तौ। लिट्। द्विर्वचनं। हलादिशेषः। अत आदेरित्यात्वं। अश्नोतेश्चेति नुडागमः। निघातः ॥

॥ अथ चतुर्थी ॥

ये अग्ने चंद्र ते गिरः शुंभंत्यश्वराधसः।
शुष्मेभिः शुष्मिणो नरो दिवश्चिद्येषां बृहत् सुकीर्तिर्बोधति
त्मना ॥ ४

ये। अग्ने। चंद्र। ते। गिरः। शुंभंति। अश्वऽराधसः।
शुष्मेभिः। शुष्मिणः। नरः। दिवः। चित्। येषां। बृहत्।
सुऽकीर्तिः। बोधति। त्मना ॥ ४

हे अग्ने चंद्र सर्वेषां प्राणिनामाह्लादकर ये नरस्ते गिरस्त्वत्संबंधिस्तोत्ररूपा [illegible]दः शुंभंति शोभनाः कुर्वंति तेऽश्वराधसोऽश्वधना भवंति। एतेन सर्वमुपलक्ष्यते। [illegible] शुष्मिणो बलवंतः संत शुष्मेभिः शुष्मैः स्वकीयैर्बलैः सद्भिः यत्नोपका

भवंति । येषां तुभ्यं वंधिनं स्तवं कुर्वतां दिवश्चिदाकाशादपि बृहन्महती सुकीर्त्ति-र्भवति । सर्वदिगंतरावर्तिनी कीर्त्तिर्भवतीत्यर्थः । एवंविधं त्वां गयस्त्मना आत्मना स्वयमेव बोधति । बोधयति ॥ शुभंति । शुभ शुम्भ दीप्तौ । तुदादिः । पादादित्वा-न्निघाताभावः । सार्वधातुकमनुदात्तत्वं प्राप्ते सति शित्वाद्विकरणस्वर एव । अश्वराधसः । अशू व्याप्तौ । अशूप्रुषीत्यादिना क्वन् । अश्नुते व्याप्नोत्यध्वानमित्यश्वः । नित्वादाद्युदात्तः । राध साध संसिद्धौ । असुन् । राध्नुवंति साधयंत्यनेन धर्मादी-नीति राधो धनं । बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वं । बृहत् । बृह बृहि वृद्धौ । शतृ । नलोपो लोपश्छांदसः । प्रत्ययस्वरः । बोधति । बुध अवगमने । ण्यंतात् शपि कृते तस्य छंदस्युभयथेति सार्वधातुकसंज्ञायां णिलोपः । यद्वृत्तान्नित्यमिति निघाता-भावः । धातुस्वरेणाद्युदात्तः । त्मना । मंत्रेष्वाङ्यादेरात्मन इत्याकारलोपः ॥

॥ अथ पंचमी ॥

तव त्ये अग्ने अर्चयो भ्राजंतो यंति धृष्णुया ।

परिज्मानो न विद्युतः स्वानो रथो न वाजयुः ॥ ४

तव । त्ये । अग्ने । अर्चयः । भ्राजंतः । यंति । धृष्णुया ।

परिऽज्मानः । न । विऽद्युतः । स्वानः । रथः । न ।

वाजऽयुः ॥ ५

हे अग्ने धृष्णुया धृष्णवोऽत्यंतप्रगल्भा भ्राजंतो दीप्यमानास्त्ये ते प्रसिद्धा अर्च-यस्त्वदीया रश्मयो यंति । सर्वतो गच्छंति । कथमिव । परिज्मानः परितो गंत्र्यः सर्वतो व्याप्ता विद्युतो नाचिरप्रभा इव । अनेन प्रकाशातिशय उक्तः । स्वानः शब्दाय-मानो रथो न रथ इव । अनेनार्चिषां स्वनाधिक्यमुक्तं । वाजयुर्न अन्नकाम इवान्नार्थं युद्धेषु शत्रुविजयाय यथा प्रवर्तते तद्वदित्यर्थः । अनेनाहुतिविषयोऽभिलाष उक्तः ॥ यंति । इण् गतौ । धृष्णुया । ञिधृषा प्रागल्भ्ये । त्रसिगृधिधृषिक्षिपेः क्नुरित्यादिना प्रत्ययः । आदितश्च । पा० ७, २, १६. । इतीट्प्रतिषेधः बहुवचने सुपां सुलु-

ना याजादेशः । चित इत्यंतोदात्तत्वं । परिज्मानः । अज व्रज गतौ

रन्येभ्योऽपि दृश्यंत इति मनिन् । अकारलोपश्छांदसः । नित्वादाद्यु-

वाजमात्मन इच्छतीति क्यच् । न छंदस्यपुत्रस्येतीत्वदीर्घ-

प्रत्ययः ॥

॥ अथ षष्ठी ॥

नू नो अग्न ऊतये सबाधसश्च रातये।

अस्माकासश्च सूरयो विश्वा आशास्तरीषणि॥ ६

नु। नः। अग्ने। ऊतये। सऽबाधसः। च। रातये।

अस्माकासः। च। सूरयः। विश्वाः। आशाः। तरीषणि॥ ६

हे अग्ने नोऽस्माकं नु क्षिप्रमूतये रक्षायै भव। सबाधसश्च दारिद्र्यनिमित्तबाधसहितस्य च रातये धनानां दानाय भव। किंच अस्माकासोऽस्माकाः पुत्रमित्रादयः सूरयः स्तोतारो विश्वाः सर्वा आशा दिशस्तरीषणि। तासां तरणे समर्था भवंतु। अथवा आशाः कामाः। अयमर्थः। स्वाभिलषितप्रशस्तसमस्तवस्तुसंपादनं कुर्वंत्वर्थः। सबाधसः। बाधेरसुन्। बाधया सह वर्तंत इति सबाधाः। वोपसर्जनस्येति सहस्य सभावः। तदुत्तरपदप्रकृतिस्वरत्वं। रातये। रा दाने। क्तिन्। मंत्रे वृषेषपचमनविदभूवीरा उदात्त इत्यंतोदात्तः। अस्माकासः। तस्मिन्नणि च युष्माकास्माकावित्यणि परतोऽस्माकादेशः। छांदसत्वादणो लोपः। बहुवचनेऽसुगागमः। षष्ठीबहुवचने सर्वो-दात्तत्वेन दृष्टत्वात्तथाविधमादेशमत्रापि कृतवानाचार्यः। विश्वाः। विशेरश्विप्रुषीत्यादि क्वन्। नित्त्वादाद्युदात्तः। तरीषणि। तॄ प्लवनतरणयोः कृतॄभ्यामीषन्। उ० ४. २६.। इतीषन्। बहुलवचनाल्लोपाभावः। अंतोदात्तश्छांदसः॥

॥ अथ सप्तमी ॥

त्वं नो अग्ने अंगिरः स्तुतः स्तवान आ भर।

होतर्विभ्वासहं रयिं स्तोतृभ्यः स्तवसे च न उतैधि पृत्सु

नो वृधे॥ ७

त्वं। नः। अग्ने। अंगिरः। स्तुतः। स्तवानः। आ। भर।

होतः। विभ्वःसहं। रयिं। स्तोतृऽभ्यः। स्तवसे। च। नः।

उत। एधि। पृत्ऽसु। नः। वृधे॥ ७

युक्तेनात्तेजसा युक्तः शुचिः शुभ्र एवंविधोऽग्निर्भरतेभ्य ऋत्विग्भ्यस्तदर्थं द्युमद्दीप्ति-
मद्यथा भवति तथा विभाति। प्रकाशते॥ गोपाः। गुपू रक्षणे। आयप्रत्ययः।
गोपायतेः क्विप्। परत्वादतो लोपः। अत्र परत्वादल्लोपे कृते वर्णाश्रयत्वात्
प्रत्ययलक्षणाभावेन यलोपो न स्यात्। लोपो व्योर्वलीति प्रथमं लोपश्च[illegible]-
पश्चाद्यलोप एव भवति। लोपाजादेशस्य यलोपविधिं प्रति न स्थानिवद्भावः। ॥४
प्रत्ययस्वरः। जागृविः। जागृ निद्राक्षये। कॄगॄशॄजागृभ्यः क्विन्निति क्विन्प्रत्ययः।
जाग्रोऽविचिण्णल्ङित्स्विति प्रतिषेधाद्गुणाभावः। नित्वादाद्युदात्तः। सुदक्षः।
आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। सुविताय। तन्वादीनां छंदस्युपसं-
ख्यानमिति उवङादेशः। सूपमानात् क्त इत्युत्तरपदांतोदात्तत्वं। नव्यसे।
नवशब्दादातिशायनेऽर्थे ईयसुन्प्रत्ययः। ईकारलोपश्छांदसः। अतो लोपः।
आद्युदात्तः। दिविस्पृशा। हृद्युभ्यां ङेरुपसंख्यानमित्यलुक्। तदुत्तरपदप्रकृति-
स्वरत्वं। द्युमत्। ह्रस्वनुड्भ्यां मतुबिति [illegible] मतुप उदात्तत्वं॥

॥ अथ द्वितीया॥

यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समीधिरे।
इन्द्रेण देवैः सरथं स बर्हिषि सीदन्नि होता यजथाय
सुक्रतुः॥ २

यज्ञस्य। केतुं। प्रथमं। पुरःऽहितं। अग्निं। नरः।
त्रिऽसधस्थे। सं। ईधिरे।
इन्द्रेण। देवैः। सऽरथं। सः। बर्हिषि। सीदत्। नि।
होता। यजथाय। सुऽक्रतुः॥ २

नर ऋत्विजो यज्ञस्य यागस्य केतुं प्रज्ञापकं पुरोहितं यजमानैः पुरस्कृतमिन्द्रेण देवैश्च सरथं तेषां मान्यत्वात्समानरथमग्निं त्रिषधस्थे त्रिस्थाने विहारप्रदेशे प्रथमं समीधिरे। समैन्धत। सुक्रतुः शोभनकर्मा होता देवानामाह्वाता सोऽग्निर्बर्हिषि [illegible] तस्मिन् स्थाने यजथाय यज्ञाय निषीदत्। निषण्णोऽभवदिति यावत्॥

केतुं। कित ज्ञाने। औणादिक उप्रत्ययः। अंतोदात्तः। पुरोहितं। पुरोऽव्ययमिति गतिसंज्ञायां गतिरनंतर इति पूर्वपदप्रकृतिस्वरत्वं। त्रिषधस्थे। आहवनीयादिलक्षणेन त्रिप्रकारेणाग्निना सह तिष्ठतीति त्रिषधस्थः। कप्रत्ययः। सधमादस्थयोश्छंदसीति सधादेशः। कृदुत्तरपदप्रकृतिस्वरत्वं। सीदत्। सदेः पाघ्रादिना सीदादेशः। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। पादादित्वान्निघाताभावः। यजथाय। यजेरौणादिकोऽथप्रत्ययः। प्रत्ययस्वरेणांतोदात्तः॥

॥ अथ तृतीया ॥

असंमृष्टो जायसे मात्रोः शुचिर्मंद्रः कविरुदतिष्ठो विवस्वतः।
घृतेन त्वावर्धयन्नग्न आहुत धूमस्ते केतुरभवद्दिवि श्रितः॥ ३

असंऽमृष्टः। जायसे। मात्रोः। शुचिः। मंद्रः। कविः।
उत्। अतिष्ठः। विवस्वतः।
घृतेन। त्वा। अवर्धयन्। अग्ने। आऽहुत। धूमः। ते।
केतुः। अभवत्। दिवि। श्रितः॥ ३

हे अग्ने मात्रोररण्योः। स्वजननिमित्तादरणी मातरावित्युच्येते। ताभ्यामसंमृष्टोऽबाधित एव जायसे। प्रादुर्भूतो भवसि। मंद्रः सर्वैः स्तुत्यः कविः क्रांतः सर्वत्र व्याप्तः। अथवा मेधावी शुचिस्त्वं विवस्वतोऽग्निहोत्राद्यर्थं वस्ते विशेषेण वसतो यजमानादुदतिष्ठः। उदितोऽभवः। पूर्वं महर्षयस्त्वा त्वां घृतेनावर्धयन्। वृद्धिमनयन्। हे आहुत आहुतिभिर्हुत ते तव दिव्यंतरिक्षे श्रितो व्याप्तो धूमः केतुः प्रज्ञापकोऽभवत्। अग्न्यनुमापकत्वाद्धूमस्य॥ मात्रोः। उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं। मंद्रः। मदि स्तुतिमोदमदस्वप्नकांतिगतिषु। अत स्तुत्यर्थादस्मात् स्फायितंचीत्यादिना रक्। अंतोदात्तः। कविः कमेरिन् सर्वधातुभ्य इतीन्प्रत्ययः। बाहुलकत्वान्मकारस्य वत्वं रेफलोपश्च। व्यत्ययेनांतोदात्तत्वं। उदतिष्ठः। उत्पूर्वादूर्ध्वकर्मवाचिनस्तिष्ठतेरात्मनेपदाभावः। विवस्वतः। विपूर्वाद्वसतेः संपदादिलक्षणो भावे क्विप्। तदस्यास्तीति मतुप्। मादुपधायाश्चेति वत्वं। मतुपोऽनुदात्तत्वाद्धातुस्वरः॥

॥ अथ चतुर्थी ॥

अग्निर्नो यज्ञमुप वेतु साधुयाग्निं नरो वि भरंते गृहेगृहे ।
अग्निर्दूतो अभवद्धव्यवाहनोऽग्निं वृणाना वृणते कविक्रतुं ॥४

अग्निः । नः । यज्ञं । उप । वेतु । साधुऽया । अग्निं । नरः ।
वि । भरंते । गृहेऽगृहे ।
अग्निः । दूतः । अभवत् । हव्यऽवाहनः । अग्निं । वृणानाः ।
वृणते । कविऽक्रतुं ॥ ४

साधुया सर्वपुरुषार्थानां साधकोऽग्निर्नो यज्ञमस्मदीयं यागं प्रत्युपवेतु । आगच्छतु । नरो मनुष्या गृहे गृहेऽनुष्ठातृगृहेष्वग्निं विभरंते । विहरंति । विहरणं कुर्वंतीत्यर्थः । हव्यवाहनो हव्यानां हविषां वोढाग्निर्दूतो देवानां दूतोऽभवत् वृणानाः संभजमानाः संत कविक्रतुं क्रांतप्रज्ञमग्निं वृणते । संभजंते ॥ साधुया । सुपां सुलुगित्यादिना विभक्तेर्यादेशः ॥

॥ अथ पंचमी ॥

तुभ्येदमग्ने मधुमत्तमं वचस्तुभ्यं मनीषा इयमस्तु शं हृदे ।
त्वां गिरः सिंधुमिवावनीर्महीरा पृणंति शवसा
वर्धयंति च ॥ ५

तुभ्यं । इदं । अग्ने । मधुमत्ऽतमं । वचः । तुभ्यं । मनीषा ।
इयं । अस्तु । शं । हृदे ।
त्वां । गिरः । सिंधुंऽइव । अवनीः । महीः । आ ।
पृणंति । शवसा । वर्धयंति । च ॥ ५

हे अग्ने तुभ्य तुभ्यं त्वदर्थं मधुमत्तममत्यंतमधुरमिदं वचः क्रियते। हृदे हृदि शं सुखं कुर्वंतीयं मनीषा स्तुतिस्तुभ्यमस्तु। गिरः स्तुतिरूपा वाचस्त्वामापृणंति। पूरयंति। शवसा बलेन वर्धयंति च। का इव। यथा सिंधवोऽवनीरवन्यो नद्यः सिंधुमिव समुद्रमिव॥

॥ अथ षष्ठी॥

त्वामग्ने अंगिरसो गुहा हितमन्वविंदञ्छिश्रियाणं वनेवने।
स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमंगिरः॥ ६

त्वां। अग्ने। अंगिरसः। गुहा। हितं। अनु। अविंदन्।
शिश्रियाणं। वनेऽवने।
सः। जायसे। मथ्यमानः। सहः। महत्। त्वां। आहुः।
सहसः। पुत्रं। अंगिरः॥ ६

हे अग्नेऽंगिरस ऋषयो गुहा गुहायां हितं निहितं निगूढं वनेवने वृक्षे वृक्षे शिश्रियाणमाश्रितं त्वामन्वविंदन्। अलभंत। महन्महता सहः सहसा बलेन युक्तः स त्वं मथ्यमानो जायसे। हे अंगिरोऽंगिरसां प्रकृतिभूतस्त्वां सहसः पुत्रमाहुः॥ शिश्रियाणं। श्रिञ् सेवायां। लिटः कानच्। शपः श्लुः। श्लाविति द्विर्वचनं। इयङादेशः। चित्वादंतोदात्तः॥

॥ इति चतुर्थस्य प्रथमे तृतीयो वर्गः॥

प्राग्नये बृहत इति षडृचं द्वादशं सूक्तं सुतंभरस्यार्षं त्रैष्टुभमाग्नेयं। प्राग्नय इत्यनुक्रांतं॥ प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे चेदं सूक्तं विनियुक्तं। सूत्रितं च। प्राग्नये बृहते प्र वेधसे। आ० ४. १३.। इति॥

॥ तत्र प्रथमा॥

प्राग्नये बृहते यज्ञियाय ऋतस्य वृष्णे असुराय मन्म।
घृतं न यज्ञ आस्ये सुपूतं गिरं भरे वृषभाय प्रतीचीं॥

प्र । अग्नये॑ । बृहते । यज्ञियाय । ऋतस्य॑ । वृष्णे॑ ।

असु॑राय । मन्म॑ ।

घृतं । न । यज्ञे । आस्ये॑ । सुऽपूतं । गिरं । भरे । वृषभाय ।

प्रतीचीं ॥ १

बृहते सामर्थ्यातिशयेन महते यज्ञियाय यज्ञार्हाय ऋतस्योदकस्य वृष्णे वर्षित्रे । ऋतमित्युदकनामसु पाठात् । असुराय । बलवते ॥ असेरौणादिक उरन्प्रत्ययः ॥ वृषभाय कामानां वर्षित्रेऽग्नये मन्म ज्ञानसाधनं प्रतीचीमभिमुखीं गिरं स्तुतिरूपां वाचं प्रभरे । प्रणयामि । कथमिव । सुपूतं सम्यक्संस्कृतमास्ये प्रहुतं यज्ञे घृतं न घृतमिव । आस्ये प्रहुतं घृतं यथा प्रीतिकरं भवति तथा प्रीतिकरीं स्तुतिमित्यर्थः ॥

॥ अथ द्वितीया ॥

ऋतं चि॑कित्व ऋतमिच्चि॑किद्ध्यृतस्य धारा अनु तृ॑न्धि पूर्वीः ।

नाहं यातुं सहसा न द्वयेनं ऋतं सपाम्यरुषस्य वृष्णः ॥ २

ऋतं । चिकित्वः । ऋतं । इत् । चिकिद्धि । ऋतस्य॑ । धाराः ।

अनु । तृन्धि । पूर्वीः ।

न । अहं । यातुं । सहसा । न । द्वयेनं । ऋतं । सपामि ।

अरुषस्य॑ । वृष्णः ॥ २

ऋतं स्तोत्रं हे चिकित्वो जानन्नग्ने त्वं ऋतं मया क्रियमाणमिदं स्तोत्रं चिकिद्धि । जानीहि ॥ कित ज्ञाने । जुहोत्यादिः । लोटि रूपं । ऋदिति पूरणः । ऋतमिति ...स्य परस्मिन्नाम्रेडिते विद्यमानेऽपि छांदसत्वात्परांगवद्भावाभावः ॥ किंच पूर्वीः बह्वीर्ऋतस्योदकस्य धारास्तस्य पोषणार्थं त्वत्प्रसादयितुमनुतृंधि । सेवानुविध्य । ...सा बलेन युक्तोऽहं यातुं कर्मणां नाशकरीं हिंसां न सपामि । न स्पृशामि । न

करोमीति यावत्। द्वयेन च सत्यानृताभ्यां यत्किंचिद्वैदिकं कार्यं न करोमि॥ मम सततायेति भावः॥ किंतु अरुषस्य रोचमानस्य वृष्णः कामानां वर्षितुस्तव ऋतं स्तोत्रमेव करोमि॥

॥ अथ तृतीया ॥

कया नो अग्न ऋतयन्नृतेन भुवो नवेदा उचथस्य नव्यः।
वेदा मे देव ऋतुपा ऋतूनां नाहं पतिं सनितुरस्य रायः॥ ३

कया। नः। अग्ने। ऋतयन्। ऋतेन। भुवः। नवेदाः।
उचथस्य। नव्यः।
वेदं। मे। देवः। ऋतुऽपाः। ऋतूनां। न। अहं। पतिं।
सनितुः। अस्य। रायः॥ ३

हे अग्ने ऋतयन् सर्वप्राणिनां जीवनहेतुकमुदकं कुर्वन् कया केनाप्यृतेन सत्येन क्रियमाणेन कर्मणा न उचथस्यास्मदीयस्य स्तोत्रस्य नवेदा ज्ञाता भुवः। भवेः। नव्यः स्तुत्य ऋतूनां ऋतुपाः। द्वितीय ऋतशब्दोऽनुवादकः। देवो द्योतमानोऽग्निर्मां वेदः। वेत्तु। सनितुर्भजमानस्यास्य मम रायः पश्वादिलक्षणस्य पतिं स्वामिनं त्वामग्निमहं न जानामि॥ भुवः। भू सत्तायां लिङर्थे लेट्यडागमः। उवङादेशः। नवेदाः। न न वेत्तीति वेत्तीत्यस्मिन्नर्थे वर्तते। कथमेतल्लभ्यते। निपातनात्। द्विनञ्पूर्वस्यासुन्प्रत्ययांतस्य वेदेरेकस्य नञो लोपोऽन्यस्य प्रकृतिभावश्च छांदसाभिना निपातितः। पाणिनिना तु नभ्राण्नपादिति सूत्रेन वेत्तीत्येतस्मिन्नर्थे निपातितः। अस्यार्थस्यानुपपन्नत्वात् छांदसाभिपक्ष एवाश्रीयते॥

॥ अथ चतुर्थी ॥

के ते अग्ने रिपवे बंधनासः के पायवः सनिषंत द्युमंतः।
के धासिमग्ने अनृतस्य पांति क आसतो वचसः संति
गोपाः॥ ४

के। ते। अग्ने। रिपवे। बंधनासः। के। पायवः।

सनिषंत। द्युऽमंतः।

के। धासिं। अग्ने। अनृतस्य। पांति। के। असतः।

वचसः। संति। गोपाः॥ ४

हे अग्ने ये रिपवे स्वकीयस्य शत्रोः बंधनासो बंधकाः स्तुत्ये त्वत्संबंधिनस्ते पुरुषाः के कीदृशाः। सामर्थ्यातिशयादेवंविधा इति केनापि ज्ञातुं न शक्यंत इत्यर्थः। ये पायवो जनानां रक्षितारो द्युमंतो दीप्तिमंतः सनिषंत दीनेभ्यो धनं प्रयच्छंति त्वदीयाः के कीदृशाः। येऽनृतस्यासत्यस्य धासिं धारकं जनं पांति रक्षंति ते त्वदीया जनाः के संति। न कोऽपीत्यर्थः। येऽसतो दुष्टस्याभिशापादि-लक्षणस्य वचसो गोपा गोपायितारो रक्षितारस्ते त्वदीयाः के संति। न कोऽपीत्यर्थः। अथवा ये के जना रिपोर्बंधकाः। ये के पायवो रक्षितारः सनिषंत धनं प्रयच्छंति द्युमंतः। ये केऽनृतस्यासत्यस्य धासिं धारकं जनं पांति अनृतजनितपापात्परिहृत्य सन्मार्गप्रदानेन रक्षंति। ये केऽसतोऽभिशापादिलक्षणाद्वचसो गोपायितारः संति ते सर्वे त्वदीयाः। त्वदुपासका इत्यर्थः॥

॥ अथ पंचमी ॥

सखायस्ते विषुणा अग्न एते शिवासः संतो अशिवा अभूवन्।

अधूर्षत स्वयमेते वचोभिर्ऋजूयते वृजिनानि ब्रुवंतः॥ ५

सखायः। ते। विषुणाः। अग्ने। एते। शिवासः। संतः।

अशिवाः। अभूवन्।

अधूर्षत। स्वयं। एते। वचःऽभिः। ऋजुऽयते। वृजिनानि।

ब्रुवंतः॥ ५

हे अग्ने तव सखायः स्तोतारो विषुणा विप्रकीर्णाः सर्वत्र व्याप्ता एते पूर्वमशिवाः परनिंदादिलक्षणास्त्वत्परिचर्यां त्यजंतोऽभद्राः संत इदानीं त्वत्परिचर्यां कुर्वंत शिवासः शिवा भद्रा अभूवन्। किंच य ऋजूयत ऋजु सम्यगाचरतेऽपि मह्यं वचो-

भिरसाधूक्तिभिर्वृजिनानि कुटिलानि ब्रुवंतस्त एते मम सपत्नाः स्वयमेवाध्रूर्वंत। अहिंसंत। ध्रूर्वतेर्हिंसाकर्मण इदं रूपं॥

॥ अथ षष्ठी॥

यस्ते॑ अग्ने नम॑सा यज्ञमीट्ट॑ ऋतं स पा॑त्यरुषस्य वृष्णः॑।

तस्य क्षयः॑ पृथुरा साधुरे॑तु प्रसर्स्रा॑णस्य नहु॑षस्य शेषः॑॥ ६

यः। ते। अग्ने॑। नमसा। यज्ञं॑। ईट्टे॑। ऋतं॑। सः।

पाति। अरुषस्य॑। वृष्णः॑।

तस्य॑। क्षयः॑। पृथुः। आ। साधुः। एतु। प्रऽसर्स्रा॑णस्य।

नहु॑षस्य। शेषः॑॥ ६

हे अग्ने यो मनुष्यो यज्ञं यजनीयं ते त्वां नमसा स्तोत्रेणेट्टे स्तौति। यद्वा ते तुभ्यं यज्ञं यागं नमसान्नरूपेण हविषेट्टे यजति॥ अस्मिन् पक्षे यजेर्बहुलं छंदसीति शपः श्लुः। श्लाविति द्विर्वचनं। बहुलं छंदसीति संप्रसारणं। सवर्णदीर्घः। जकारस्य टकारः॥ योऽरुषस्य रोचमानस्य वृष्णः कामानां वर्षितुस्त्वं ऋतं स्तोत्रं पाति रक्षति तस्य यजमानस्य क्षयो गृहं पृथुर्विस्तीर्णं भवति। पश्चादिच्छथैर्धनैः संपूर्णं भवतीत्यर्थः। प्रसर्स्राणस्य प्रकर्षेण परिचर्यां गच्छतो नहुषस्य मनुष्यस्य साधुः कामानां साधकः शेषः। भिष्यत इति शेषः। पुत्र ऐतु। आगच्छतु। भवत्वित्यर्थः॥

॥ इति चतुर्थस्य प्रथमे चतुर्थो वर्गः॥

अर्चंतस्त्वेति षड़्चं त्रयोदशं सूक्तं सुतंभरस्यार्षं गायत्रमाग्नेयं। अनुक्रांतं च। अर्चंतो गायत्रं त्विति॥ प्रातरनुवाक आग्नेयक्रतौ गायत्रेछंदस्याश्विनशस्त्रे इदमादिके द्वे सूक्ते। सूत्रितं च। अर्चंतस्त्वेति सूक्ते। आ० ४, १३,। इति॥ आहवनीयोपस्थाने त्वमग्ने सप्रथा असीत्येका। सूत्रितं च। सं नः स्तुत सुमत्या वाजवत्या त्वमग्ने सप्रथा असीत्येका। सूत्रितं च। सं नः स्तुत सुमत्या वाजवत्या त्वमग्ने सप्रथा असीति च। आ० ३, १०,। इति॥ अश्वमेधे पौष्णेष्टौ त्वमग्ने सप्रथा इति प्रथमाज्यभागानुवाक्या। त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति सूत्रितो आ० १०, ६,। इति॥

॥ तत्र प्रथमा ॥

अर्चंतस्त्वा हवामहेऽर्चंतः समिधीमहि ।

अग्ने अर्चंत ऊतये ॥ १

अर्चंतः । त्वा । हवामहे । अर्चंतः । सं । इधीमहि ।

अग्ने । अर्चंतः । ऊतये ॥ १

हे अग्ने त्वा त्वामर्चंतः पूजयंतो वयं हवामहे । आह्वयामः । अर्चंतः स्तुवंतो वयमूतये रक्षणाय तर्पणाय वा त्वां समिधीमहि । समिद्भिः संदीपयामः । अर्चंत इति तृतीयं पदमादरातिशयार्थं ॥

॥ अथ द्वितीया ॥

अग्नेः स्तोमं मनामहे सिध्रमद्य दिविस्पृशः ।

देवस्य द्रविणस्यवः ॥ २

अग्नेः । स्तोमं । मनामहे । सिध्रं । अद्य । दिविऽस्पृशः ।

देवस्य । द्रविणस्यवः ॥ २

द्रविणस्यवो द्रविणं धनमिच्छंतो वयं दिविस्पृशः स्वर्गं आकाशं व्याप्नुवतो देवस्य द्योतमानस्याग्नेः सिध्रं पुरुषार्थानां साधकं स्तोमं स्तोत्रमद्यास्मिन्नहनि मनामहे । ब्रूमः ॥

॥ अथ तृतीया ॥

अग्निर्जुषत नो गिरो होता यो मानुषेष्वा ।

स यक्षद्दैव्यं जनं ॥ ३

अग्निः । जुषत । नः । गिरः । होता । यः । मानुषेषु । आ ।

सः । यक्षत् । दैव्यं । जनं ॥ ३

